अतएवाहत्यैव विप्रतिपत्तिजन्यमपि संशयमामनन्ति । फलबलकल्पनीयप्र

---

कोटिद्वयभानसामग्रीसबलत्वस्य विरोधमसकृदमपि मनपेक्ष्याऽपेक्ष्य वा तत्प्रयोजकत्वस्यासम्भवदुक्तिकत्वञ्चेति वाच्यम् । विरोधावगाहित्व सहितको टिद्वयावगाहित्वं संशयत्वमिति प्राचीनसिद्धान्तमवलम्ब्यापाततस्तज्जन्यता नवच्छेदकत्वाभिधानात् ।

अथैवमपि संशयानुमिति व्यवस्थापन मशक्यम् , विषयताविशेषरूप संशयत्वे परामर्शादिघटितानुमिति सामग्र्या प्रयोजकत्व कल्पकाभावदिति चेन्न,- अविरोधज्ञानमनपेक्ष्य स मग्र सम जा देकदा- एकधर्मिणि तत्तदभावो भय निश्चयानुमित्यनुदयात्संशयानुमितिसिद्धौ अन्य प्यवृत्तित्व ज्ञान म वसहि तयो प्रत्यक्षसामग्र्यो रिवानुमिति सामग्र्योरपि संशयत्वावच्छिन्नोत्पत्ति प्रयोजकतया अवर्जनीयत्वात् । नच संशयत्वावटर्कीभूताया निश्चयविषयता तस्याः संशयन्याव्रुत्ये संशयसामग्र्या स्तदवच्छिन्न प्रति प्रतिबन्धकत्व कल्पनीयम् , संशयसामग्र्यत्वञ्च प्रत्यक्षानुमिति सामग्रीसाधारणं नकामि- त्यव्याप्यवृत्तित्व ज्ञानाभाव विशिष्ट विरोधिकोट्यनुमिति सामग्र्य प्रतिबन्ध कत्वे कल्पनाये अनुमितित्वस्यैव तत्प्रतिबद्धयतावच्छेदकत्व मुपेयते, लाघ- वात् , ननु निश्चयत्वस्यति न संशयानुमिति सम्भव इति वाच्यम् । प्रत्यक्ष संशयस्य तादृशविषयत शालित्व व रणाय तदवच्छिन्न प्रति संशये पथ वक ता विशिष्टत्वेनैव सामग्र्य। प्रतिबन्धकत्वकल्पनायद्रूपस्य च संशयानुमिति सामग्रीसाधारणतया तत्प्रतिबन्धकतान्तराकल्पनादिति वदन्ति ।

"अतएव"- तुल्यबलसामग्री समाजा त्प्रत्यक्षस्येव परोक्षस्यापि संश यस्योत्पत्ते व प्रकारान्तरेव । "आहत्यैव"- साक्षादेव । विप्रतिपत्तिवाक्य तो जन्म यस्य एव भूत शाब्दबोधात्मक संशयमपि वदन्तीत्यर्थः । ननु समानबलत्व न्यूनाधिकबलत्व वा सामग्र्या कथ मवधारणीय मित्यत आह ( फलबलकल्पनीयप्रेति ) सामग्रीसवलम्बके एकस्या

न्यूनाधिकसमबलभाव, सत्यामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्तिनि शंखे सति दोषविशेषे पीतत्वस्यैवाऽसतिच शुक्लत्वस्यैव, दूरस्थे च धर्मिणि असति विशेषदर्शने स्मृतयोरेव कोट्योः सतिच एकस्या एव नयनेन ग्रहणात् ।

---

फलानुरोधस्या न्यूनाधिकबलभावः उभयोः फलेत्पत्त्या समबलभावो ऽवधारणीय इत्यर्थः । एतदेव विविच्योदाहरति ( सत्यामपीति ) ( पीतत्वशुक्लत्व स्मृतावपीति ) " सविधवर्तिनि " " शंख " इत्याभ्यां विशेषणद्वयानविशेष्येन्द्रिय सन्निकर्षघटित तदुभयविशिष्ट प्रत्यक्षसामग्रीसत्त्वं दर्शितम् । "दोषविशेषे "- पीतद्रव्यसमवधानरूपे " पीतत्वस्यैव " ग्रहणादित्यग्रिमेणान्वयः । तथाच फलबलात् श्वेत्यादि लौकिकप्रत्यक्षसामग्रीतो दोषविशेषोप बृंहित पीतत्वशुक्लत्वाभावादि अ.हकसामग्र्या बलवत्त्वमिति भावः । दोषविशेषासत्त्वे उपनीतभानसामग्र्यपेक्षया लौकिक सन्निकर्षघटित विरोधिग्रह सामग्र्या बलवत्त्वमित्याह ( असतिच शुक्लत्वस्यैवे ) । कि वा समवधानस्थले उपनयघटित सामग्रीद्वयस्य तुल्यबलत्वमाह ( दूरस्थ इति ) धर्मिणो दूरस्थत्वे असतिच विशेषदर्शने विद्यमानकोटेरपि न लौकिकसामग्री दूरत्वदोषस्य विशेषादर्शनसहितस्य लौकिकग्र. वेरोधित्वादिति लौकिकसामग्री विघटनाय दूरस्थत्व विशेषादर्शनयोरनुधावनम् । " स्मृतयो " रित्युपनय सम्पादनाय । " कोट्योः " स्थाणुत्व तदभावयोः । विशेषदर्शनघटित सामग्र्या बलवत्त्व माह ( सति चेति ) " सतिच " विशेषदर्शने । "एकस्याः " गृहीतविशेषायाः कोटेरेव । " नयनेन ग्रहणात् " । अत्रच ग्राह्यविपरीतविशेषदर्शनस्यैव प्रतिबन्धकत्वं नतु सामग्र्या इत्यवधेयम् ।

ननु कोटिद्वयभासक सामग्रीसमाजादेव चेत्संशयः तदा संस्कारं प्रति निर्णयत्वेन हेतुत्वमपि न संशयाकार स्मरणवारणसम्भवः, प्रत्येकं तत्तदभावगोचरनिश्चय जन्यसंस्कारद्वय संवलनात्तदुत्पत्तेः बाधकाभावादित्यत्र-

अथैवमुद्बुद्धाभ्यां विरोधिसंस्काराभ्यां स्मरणमपि संशयात्मकं स्यात् ? किं नस्या यदि च नानुभवबाधः, यन्न गुरुणापि निश्चयत्वेन संस्कारजनकत्वमुपेयते भवता। अथ विरोधिनो निर्णयस्यानुमितिप्रतिबन्धकं विरोधित्वञ्च सहानवस्थायित्वं साध्याभावस्य तद्व्याप्यस्य चोति चेत्? यदि वस्तुतो विरोधिनो निर्णयस्तथा, कथं तर्हि पक्षतावच्छेदकवत्तादशस्य निश्चये भ्रमानुमितिः।

---

इते (अथैवमिति) (उद्बुद्धाभ्यामिति) नचोद्बोधकस्य फलैकोन्नेयतया एकदा विरुद्धकोटिद्वयोद्बोधककल्पनानुपपत्तिरिति वाच्यम्, नियतोद्बोधकसम्बन्धि वस्तुविशेषज्ञानादीनामनुगतरूपेणैव कारणतया कल्पनात्तादृशोद्बोधकद्वयसमवधानादेव यत्र तत्रैव क्वचित् सम्भवात्। अनुभवविरोधविरहे इष्टापत्तिमाह (किं नस्यादिति) अनुभवविरोधस्यापि स विवादतया (यदीति) "येन" अनुभवविरोधेन। भवतेत्यनेन परस्परसाध्यसाधनप्रतिबन्धकताकल्पनमन्तरेण तथाविधसंशयाकारस्मरणवारणं न सम्भवतीति सूचितम्। नाभवुद्धेरत्यन्तान्योन्याभावसाधारणविरोधिप्रकारत्वेनैव प्रतिबन्धकत्वं, तथात्वञ्च विरोधिपरामर्शस्यापीति मूलोक्तसिद्धान्तं दूषयितुमाशङ्कते (अथेति) तद्विरोधित्वं तदभाववद्व्याप्यत्वं स्वव्यापकत्वरूपं वा। स्वत्वघटितत्वेन न सर्वसाधारणमित्यत उक्तं (सहानवस्थायित्वमिति) विरोधस्य विषये उपलक्षणत्वं विशेषणत्वं वेति विकल्प्य दूषयति (यदीत्यादिना) 'तथा'- प्रतिबन्धकः (पक्षतावच्छेदकेति) हृदत्वावच्छिन्नहृदादिरूपपक्षविशेषणस्य हेतुत्वेनाभिमतस्यवादादेरिति) "तादृशस्य"- वस्तुगत्या वह्न्यादिविरोधिन। 'निश्चये भ्रमानुमिति'-निर्णयाधीना भ्रमानुमितिः। भवतीत्यर्थः। तत्र जनकज्ञानस्यैवोक्तप्रतिबन्धकतावच्छेदककान्तत्वादिति भावः। यद्यपि जलमयत्वादे विरोधित्वगाहि भ्रमदशायां तदनवच्छिन्नपक्षावगाहिन्या स्वनिष्ठहेत्वाश्रयत्व बह्नि

अथ विरोधित्वेन ? तदा तद्ग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमिति-प्रसङ्गः। अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकम्, कथमन्यथा तदनन्तरं न भ्रमसंशयाविति, चेन्न; सत्यपि शुक्लत्वादिव्याप्यदर्शने शंखादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेनच पीतत्वादिव्याप्यवत्तानिश्चये

ज्ञानित्यधनुमितेरपि पक्षतावच्छेदकावच्छिन्ने जलमयत्व भ्रमदशायां मनुपपत्ति रस्ति, तथापि जलमयोयं वह्निमानित्याद्यनुमितिस्थले प्रतिबन्धकत्वेन तथाविधानुमितिमात्रोच्छेद इत्यभिप्रायेण तावद्दूरानुसरणम्। (अथ विरोधित्वेनेति) "निर्णयस्तत्र" त्यनुपज्यते। 'तद्ग्रहे'- वह्न्यभावादौ वह्न्यादेर्विरोधग्रहे। (अनुमितिप्रसङ्ग इति) तथाच वह्न्यभावत्वाद्यवच्छिन्नावगाहि निश्चयत्वेनैव विशिष्य बाधबुद्धेः प्रतिबन्धकताभ्युपगमे लाघवात्, तच्च न विरोधिपरामर्शसाधारणमिति भावः।

इदमुपलक्षणम्, अनुगततदधिकरणवृत्तित्व रूपविरोधावच्छिन्नप्रकारकनिश्चयत्वेन विरोधित्वेऽपि व्याप्यव्यापकतत्सामानाधिकरण्यरूपव्याप्त्यवगाहि विरोधिपरामर्शस्य तद्रूपानाक्रान्ततया तादृशपरामर्शाभ्यां संशयानुमिति जनने बाधकाभावः, एवं तत्सम्बन्धेन तदधिकरणवृत्तित्वावच्छिन्नस्य तत्सम्बन्धावगाहि ज्ञानेनेव विरोधीति सम्बन्धविशेषनिवेशस्यावश्यकतया विशेषणताविशेषादिसंसर्गक प्रत्यक्षाभावादिज्ञान सम्बन्धान्तरावगाहि विरोधिपरामर्शयो नानुगतरूपेण प्रतिबन्धकतासम्भव इत्यपि बोद्धव्यम्।

ननु माभूद्बाधबुद्धि प्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वं विरोधिपरामर्शस्य, तथापि न संशयानुमित्यवसरः, स्थाणुत्वाभाववव्याप्यकरादिमानयमित्यादिनिश्चये स्थाणुत्वादिमत्ताभ्रमसंशयानुदयात् तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयत्वेनप्रतिबन्धकताया आवश्यकत्वादित्याशङ्कते (अथेति). (शुक्लत्वादीति) पीतत्वाभावादीत्यर्थः। "दुष्टेन"- पित्तादिदूषितेन. (पीतत्वादीति) शुक्लत्वमेवेत्यर्थः। नन्वेवं नरायत्वं प्रति द्रव्-

सत्यपि शुक्रत्वादेर्ग्रहात्, सति च विशेषदर्शने क्वचिदुपनीतभानानुदयात्, दूरतः प्रमितस्य स्थाणुत्वादेः शाखादौ करादिभ्रमेणाग्रहात् तत्तत्स्थल-विशेष एव तस्य प्रतिबन्धकत्वमिति । अत्राहुः- अनुगतकार्यकारण-

विशेषणं देयमित्यत्राहो उपनीतभान [निश्चय] विशेषासंग्रहं प्रदर्श्य दूषयति ( सतिचेति ) " विशेषदर्शने "- विरोधिव्याप्यदर्शने । ननु प्रथमस्थला-नुरोधेन दोषविशेषाजन्यत्वं द्वितीयानुरोधेन च लौकिकसन्निकर्षाजन्यत्वं विशेषणं देयमित्यत आह ( दूरत इति ) " प्रमितस्य "- करादिभ्रमात्मा-ग्रहमात्मकलौकिकसन्निकर्षाश्रयस्य । एतेन करादिभ्रमदशायामपि दूरत्वादेव स्थाणुत्वाग्रह इति शङ्का निराकृता । (अग्रहादिति) तथाच लौकिकसन्नि-कर्षाजन्यत्वनिवेशे तत्र स्थाणुत्वादिप्रत्यक्षापत्ते स्तद्विशेषो न सम्भवतीति भावः ( स्थलविशेष इति ) यद्व्यक्तित्वेन विशिष्टबुद्धिजनकत्वे तद्व्यक्ति-त्वेनैव विशिष्टबुद्धित्वावच्छिन्नम्प्रति प्रतिबन्धकत्वं वाच्यमित्यर्थः । तथाच कोट्यन्तरविशेषदर्शनसहित विरोधदर्शनव्यक्तीनां प्रतिबन्धकत्वाकल्पनात्संश-यानुमिति निष्पत्त्यूहेवेतिभावः । क्वचिल्लौकिकसन्निकर्षजन्यज्ञाने दूरत्वादिसह-कृत तदभाववद्व्याप्यभ्रमस्य विरोधित्वेपि लौकिकसन्निकर्षाजन्यविशिष्टबुद्धित्वाव-च्छिन्नम्प्रति तदभाववद्व्याप्यवत्तानिश्चयत्वे नानुगतप्रतिबन्धकताकल्पनमुचितम्, तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वेऽनन्तप्रतिबन्धकता प्रसङ्गात् । दूरत्वादिदोष सहकृतविशेषदर्शनस्य च प्रतिबद्धतावच्छेदककोटौ लौकिकान्यत्व मनिवे-श्य प्रतिबन्धकत्वान्तरं कल्पनीयमिति समाधत्ते ( अनुगतेति ) " दोषवि-शेषादी " त्यादिना लौकिकसन्निकर्षपरिग्रहः । दोषविशेष जन्यज्ञानेपि साक्षात्कारित्वव्यञ्जकविषयता विशेषोपगमा तज्जन्यत्वं निवेश्यैव दोषविशेष जन्यलौकिक सन्निकर्षजन्यज्ञाने व्यावर्तनीये । एवञ्च परमेश्वरबुद्धावपि ता-दृशविषयतया एव स्वीकारान्न नित्यसाधारण्यम्, नवानुगतधर्मस्य प्रतिबध्य तावच्छेदकत्वे चक्षुस्सन्निकर्षादिजन्यभेदानामेकत्र निवेशनीयतया मिथोविरो

भावानुरोधात् दोषविशेषाजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शनं विरोधि कल्प्यते । न च प्रत्यक्ष एव तथा, सामान्ये बाधकाभावात्, बोध्याभावव्याप्यवत्तानिश्चयेन शाब्दादेः प्रतिबन्धाच्च ।

---

चक्षुस्संयोगाद्यजन्यचाक्षुषत्वादीनां जन्यतावच्छेदकत्वापत्तिः [अन्धकारे चक्षुस्संयोगदशायां घटे पनीतभानस्य चक्षुस्सन्निकर्षजन्यत्वेन प्रतिबध्यतावच्छेदकतानाक्रान्ततया विशेषदर्शनकालेऽपि सादृश्योपनीतभानापत्तिश्चेति] एवमनाहार्यत्वस्यापि निवेशो बोध्यः, तेनाहार्यचाक्षुषादीनां विरोधिनिर्णये प्रतिबद्धतोपपत्तिः । आहार्यत्वञ्च स्वविषयकेच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षत्वम्, स्वविषयत्व स्वाव्यवहितोत्तरत्वोभयसम्बन्धेन इच्छावच्छिन्नप्रत्यक्षत्वं वा । आहार्यचाक्षुषादौ च चाक्षुषादीच्छायाः हेतुत्वोपगमान्नेच्छां विना विरोधिनिश्चयादापत्तेः ( कदाचिदिति ) यदि विशेषदर्शनं परिभूय यज्ज्ञानमुत्पद्यते तदधीनं स्मरणमपि विशेषदर्शनकालेऽनुभूयते तदेत्यर्थः ।

यत्तु विशेषदर्शनकाले पूर्वज्ञातविरोधिविशिष्टज्ञानमेव स्मर्यते, न तु तद्विपरीतविशिष्टम्, यावद्विशेषदर्शनेनाऽप्रामाण्यं गृह्यते । तथाच ज्ञानत्वमेव प्रतिबध्यतावच्छेदकम्, नत्वनुभवत्वम्, अनुभवत्वजातेरप्रामाणिकत्वात् । स्मृतिभिन्नज्ञानत्वस्य तथात्वे गौरवात् । प्रत्यक्षत्वस्य तथात्वमाशङ्कते ( नचेति ) समाधत्ते ( सामान्य इति ) सामान्यधर्मस्य ज्ञानत्वस्य तथात्वे बाधकाभावादित्यर्थः । ननु संशयानुमितेस्सन्दिग्धतया ज्ञानत्वस्य विरोधिपरामर्शाभावजन्यतावच्छेदकत्वकल्पनं न सम्भवति, व्यभिचारसंशयस्य विरोधित्वादित्यत आह ( बोध्याभावेति ) "शाब्दादे" रित्यादिना उपमिति स्मृति परिग्रहः । तथाच ज्ञानत्वस्य तथात्वे शाब्दादिस्थले स्वतन्त्र प्रतिबन्धकताकल्पनेन लाघवात् व्यभिचारसन्देहो ऽकिञ्चित्कर इति भावः । ननु तद्व्याप्यवत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञाने उत्तेजकत्व माव-

अथ विशेषान्तरदर्शनविरहदशायामेव तथाऽस्तु, अन्यथा कोटिद्वयविशेष-
दर्शने संशयो न स्यादिति चेत् ; न भवत्येव तदा यथार्थप्रामाण्यं न गृह्यते,
अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्य विरोधित्वादिति ।

---

ज्ञापकम्, अन्यथा कोटिद्वयव्याप्यदर्शनदशायां प्रत्यक्षात्मकस्यापि संशयस्यो-
त्पादसम्भवात्तदानीं संशयानुभवापलापप्रसङ्ग इति सत्प्रतिपक्षस्थलनदशाया
मुत्तेजकसत्त्वेन संशयानुमिति निष्प्रत्यूहैवेत्याशङ्कते ( अथेति ). ( यथार्थ
प्रामाण्यं न गृह्यत इति ) तथा चानयोरेकतरस्मिन्नादिरित्या सामान्यत
स्तत्प्रामाण्यग्रहे विशिष्योभयत्रैवाप्रामाण्यसंशयेन प्रत्यक्षसंशयो भवतीति
भावः । एतदुपपादकमेव ह ( अगृहीताप्रामाण्यस्यैवेति ) अप्रामाण्यसंशया
दनुमितिरूपसंशयो न सम्भवत्येव, अगृहीताप्रामाण्यकपरामर्शरूपफलस-
कारणविरहात्कारणान्तरस्य च कल्पकाभावात् ।

मिश्रास्तु तद्व्याप्यदर्शनस्य तदभावव्याप्यदर्शनप्रतिबन्धकतायामुत्ते-
जकत्वेऽपि प्रत्यक्षसंशयवदुभयव्याप्यदर्शनान्न संशयानुमितिरुत्पद्यते । यतो
व्याप्यदर्शनमवधारणमात्रजनकं न एव हेतुः, अवधारणत्वं चानुमितौ व्याप्यदर्शन
जन्यप्रत्यक्षे च स्वीक्रियते । अवधारणद्वयसामग्रीसमाजे च न संशय, [तथा
च निश्चयत्वेनावधारणत्वं] अवधारणत्वस्य संशयान्यवृत्तत्वात् एककोट्यवधा
रणे तद्विरोधिके अवधारणजनकविशेषदर्शनस्य प्रतिबन्धकतया विरोधिको
टिद्वयावधारणसामग्रीसवलनस्याऽसम्भवात्, तादृशाप्रतिबध्यप्रतिबन्धकभावा
कल्पने उभयकोटिव्याप्यदर्शनकाले उभयकोट्यवधारणापत्तेः । न चेष्टा-
पत्तिः, तत्र संशयान्यथानुपपत्त्याऽवधारयामीतिप्रतीत्यननुभवात् । तादृशकोटि
द्वयविशेषदर्शनकाले चैकविशेषदर्शनस्य परविशेषदर्शनेनाप्रयोजकीकृत-
त्वात् । विशेषदर्शनदशायां विशेषणज्ञानादिघटित यादृशसामग्रीसमाजा-
त्प्रत्यक्षसंशयः तादृशस्य तत्राप्यक्षतत्वाद्भवति संशयात्मकं प्रत्यक्षम् ।
अनुमितिस्थले च [ या सामग्री बलवती सावधारणत्वप्रयोजिका ]

अवधारणत्वसामग्र्यतिरिक्तसामग्री न कल्प्यते, प्रयोजनाभावात्, इति कु संशयानुमिति वार्तेत्याहुः ।

तेषामयमाशयः, अवधारणत्वं न निर्णयत्वम्, विरोधिकोट्यनुपस्थितिकालीनविशेषदर्शनजन्येन निर्णयानन्तरमवधारयामीति प्रतीत्यनुदयात् । किन्तूत्कटनिश्चयत्वम् एककोट्यंशविषयताविशेष एव, अन्यस्य दुर्वचत्वात् । स एव च प्रत्यक्षानुमितिसाधारणो व्याप्यदर्शनजन्यतावच्छेदको विरोधिव्याप्यदर्शनप्रतिबध्यतावच्छेदकश्चेति ।

अत्र च निश्चिनोम्यवधारयामीति प्रतीत्योः समानविषयतया निश्चयत्वमेवावधारणत्वम्, अनभ्यासदशापन्नज्ञानाद्विशेषदर्शनकालीनज्ञाने अप्रामाण्यशङ्कानास्कन्दितत्वमेव विशेषः । निश्चयत्वस्यार्थसमाजग्रस्तता स्वयमभ्युपेतेति तत्र न दीधितिकृतो निर्भरः ।

इदन्त्ववधेयम्, विरोधिज्ञानदशायामाहार्यज्ञानोपपत्तये यदि निरुक्तमनाहार्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेश्यते तदा तस्याव्यवहितोत्तरत्वघटिततया अव्यवहितोत्तरत्वस्यानुगतस्य दुर्वचतया इच्छाव्यक्तिसमसङ्ख्यकभेदनानिवेशनीयतया महागौरवम्, इच्छाया आहार्यज्ञानसामग्रीघटकतानिर्वाहाय तस्यास्तद्धेतुताभ्युपगन्तव्या चेति इच्छाया उत्तेजकत्वमेव समुचितः ; तथाच न प्रत्यक्षशाब्दादिसाधारणबुद्धौ प्रतिबन्धकतैक्यसम्भवः, विरोधिज्ञानदशायां चाक्षुषत्वादिप्रकारकेच्छाकालोत्पादितानां चाक्षुषादीनां तज्जातीयप्रत्यक्षेच्छानां विशिष्योत्तेजकतां स्वीकृत्य तज्जातीयप्रत्यक्षे पृथक्प्रतिबन्धकताया आवश्यकत्वात् । तथाचानुमितिस्थले पृथक्प्रतिबन्धकतायाः अभ्युपगन्तव्यत्वात्संशयानुमितिर्दुर्वारैव । यदि कथञ्चिदव्यवहितोत्तरत्वमनुगतं शक्यते निर्वक्तुम्, चाक्षुषस्पार्शनादिभेदेन प्रत्यक्षस्थले चाक्षुषादिविशेषेच्छाविरहविशिष्टविरोधिनिश्चयत्वादिरूपगुरुधर्मावच्छेदेन प्रत्ये

णतावच्छेदकत्व शाब्दोपमित्योरिच्छाविरहविशेषित विरोधिनिश्चयाभाव कार-
णताद्वयस्य च कल्पनापेक्षया तदेकेन प्रत्यक्षेच्छात्वादिरूप लघुधर्मपुरस्कारेण
कारणतावच्छेदकस्य इच्छाविशिष्टान्य बुद्धिसामान्ये विरोधिनिश्चयाभावस्यैक
हेतुताया एव कल्पने लाघवमीक्ष्यते । तदा अव्यवहितोत्तरत्व सम्बन्धेन
विरोधिनिश्चयावच्छिन्नत्वेनैव तत्प्रतिबध्यतावच्छेदकमङ्गीक्रियताम् । तथा
सति देशविशेषाजन्यत्वादेरप्यनिवेशनीयतया लाघवात् । तथा च उभय
त्वाप्यवच्छिन्ननिश्चय दशायां संशयानुमिते रुपगमेऽपि तादृशप्रतिबन्धकाभाव
स्यापि च प्रत्यक्षजनकशाब्दविरोधिपरामर्शमात्र घटिताया एवानुमितिसामग्र्या
अनुमित्युत्पाद प्रयोजकत्वोपगमात् संशयानुमिति दुर्वारैवेति ।

एतेन वह्न्यभाव व्याप्यवान्पर्वत इत्याकारकाश्रयासिद्ध्यादि निश्च-
यदशायां वह्निमान्पर्वतो घटवानित्याद्यनुमिति वारणाय वह्न्यादिप्रकारकानु-
मितावपि तदभावव्याप्यबुद्धेः प्रतिबन्धकत्व मावश्यकमिति न संशयानुमिति
प्रसङ्ग इत्यपि निरस्तम्, तदभाववद्व्याप्यवत्तानिश्चयस्य तदभाववद्व्याप्यवत्तानि
श्चयत्वावच्छिन्न बुद्धिप्रतिबन्धकत्वे फलानुरोधेन तद्विशिष्टप्रकारक यत्नुमिति सा-
मग्र्यां तदभाववद्व्याप्यवत्तानिश्चयाभावान्तर्भावेऽपि प्रयोजनविरहेण तद्भिन्ना-
नुमिति सामग्र्यां तदन्तर्भावानुपगमात् ।

अत्राहुः — अस्तु प्रत्यक्षस्थले विरोधिज्ञानप्रतिबन्धकतायामिच्छाना-
नुत्तेजकतैव, तथापि परोक्षशाब्दादिस्थले प्रत्यक्षान्यत्व सहितस्य ज्ञानत्वस्य
प्रतिबध्यतावच्छेदकत्व मङ्गीक्रियते, नतु शाब्दत्वादि नानाधर्माणामिति न
संशयानुमिति प्रसङ्गः । नच प्रत्यक्षान्यत्वज्ञानत्वयोरेकविशिष्टापरस्यैवा नति
प्रसक्तस्यावच्छेदकत्व मङ्गीकार्यम्, तत्र च विशेषणविशेष्यभावे विनिगम
नाविरह इति वाच्यम् ; प्रत्यक्षान्यत्ववैशिष्ट्यस्य गुणत्वादिसाधारणतया
तन्मात्रेण ज्ञानत्वस्य निवेशे इतरव्यावृत्त्यसम्भवा ज्ज्ञानत्वस्य विशेष्यत्वे वि-

तद्विरोध्यनुमितिसामग्रीकाले प्रत्यक्षशाब्दादिवारणाय तत्र तद्दशासामग्र्याः
प्रतिबन्धकत्वे स्वीकार्ये अनुमितिसाधारण्ये तद्विशिष्टजिज्ञासानवच्छिन्न
तद्विशिष्टधीत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमात् न संशयानुमितिप्रसङ्ग
इति वाच्यम् । लाघवज्ञानाघटितशुद्धभावत्वादिप्रकारकानुमितिसामग्र्या
अपेक्षिकायाः प्रतिबन्धकत्वस्यैवोपपत्तेः प्रत्यक्षादौ लाघवज्ञानमन्तर्भाव्य साम
ग्रीप्रतिबन्धकत्वान्तरस्यैव सिद्धेः, तथा च नैकानुमितिवारणसम्भवः ; तत्प्र-
तिबध्यतावच्छेदककोटौ महानसीयवह्नित्वावच्छिन्नविषयकानुमितित्वस्य ता-
दृशज्ञानत्वस्यैव निवेशनीयत्वात् । अथ यत्र महानसीयवह्निमानित्यनुमित्यु
त्पत्त्या शुद्धभावत्वावच्छिन्नप्रकारकानुमितिसामग्र्या महानसीयवह्नित्वाव-
च्छिन्नप्रकारकानुमित्यप्रतिबन्धकत्वम् । यदि च लाघवज्ञानजन्य महानसी
यवह्निभावत्वादिप्रकारकानुमितौ महानसीयवह्निभावत्वादिकमपि विधेयताव
च्छेदकम्, तथा च शुद्धाभावत्वादिप्रकारकसिद्धिदशायां शुद्धाभावत्वाव-
च्छिन्नविधेयकानुमितिसामग्र्या असत्त्वात् तदानीमेव लाघवज्ञानसत्त्वे तत्प्र-
त्यक्षादिवारणाय लाघवज्ञानघटितसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनमाव-
श्यकमित्युच्यते ; तदापि लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्री .
संवलनदशायां भवन्मते प्रत्यक्षशाब्दबोधोत्पत्तये एककोटिसामग्र्या अपरको
टिसामग्र्यभावनिवेशस्यावश्यकतया कथं तत्प्रतिबन्धकतया संशयानुमिति-
वारणसम्भवः । एतेन विरोधिविषयकनिश्चयानन्तरमेव तत्सामग्र्यनन्तरमपि
इच्छया परोक्षज्ञानं नोत्पद्यते, एवञ्च लाघवज्ञानघटितविरोधिकोट्यनुमिति
सामग्रीदशायामिच्छासत्त्वेऽपि न शाब्दबोधादिरुत्पद्यते, किन्तु विरोधिको-
ट्यनुमितिरेवेति, फलानुरोधेन इच्छाभावप्रतिबन्धके इच्छानवच्छिन्नत्वस्य
प्रतिबध्ये विशेषणमनिवेश्य लाघवज्ञानघटितविरोध्यनुमितिसामग्र्याः परोक्ष-
तद्विशिष्टज्ञाने प्रतिबन्धकत्वान्तरकल्पनमावश्यकमेव तत्प्रतिबध्यतावच्छेद

कस्य परोक्षज्ञानत्वस्यानुमितिसाधारण्यानोक्तत्वेऽपि संशयानुमितिप्रसङ्ग इत्यपि निरस्तम् । विरोधिविषयकनिश्चयसामग्रीदशायां निश्चयात्मकपरोक्षज्ञानानुत्पादस्य प्रामाणिकत्वमित्याहुः ।)

अत्राहुः संशयसमुच्चययोर्विरोधभानाभानप्रयुक्तवैलक्षण्यस्य दुर्वितत्वात् संशयत्वस्य विषयिताविशेषरूपत्वमावश्यकम् । तादृशविषयिता च कोटिनिरूपिता, कोट्युपरागेणैव सन्देहमिति प्रतीतेः । तत्तत्कोटिनिरूपितविषयिताविशेषभिन्नतत्तत्कोटिविषयिताशालित्वं तत्तत्कोटिनिश्चयत्वम् । तथा च निश्चयत्वघटकविषयितायाः संशयसाधारण्ये तत्रापि निश्चिनोमीति प्रतीत्यापत्तिरिति तस्यास्तद्व्यावृत्तत्वमावश्यकम् । तथैव च संशयसामग्र्या तादृशविषयिताशालिज्ञानप्रतिबन्धकतयैव स्वोक्तबाधज्ञानादितसामग्र्यां संशयस्वीकारेणापि निश्चयत्वघटकनिरुक्तविषयितायाः तादृशसंशयस्य द्वयार्थे लाघवज्ञानघटितविपरीततर्कानुमितिसामग्र्या तत्तत्कोटिनिरूपिततादृशविषयिताशालिज्ञानप्रतिबन्धकत्वमावश्यकम् । तथा च लाघवात्संशयत्वघटकविषयिताभेदमनिवेश्यैव तत्कोटिप्रकारकत्वस्य तादृशसामग्रीप्रतिबध्यतावच्छेदकत्वोपगमात् नोक्तसामग्र्यां तत् संशयं नामेति । न च संशयत्वघटकतत्कोटिप्रकारितात्वभिन्नतत्कोटिप्रकारिताकज्ञानत्वं न तत्कोटिनिश्चयत्वम्, अपितु तादृशप्रकारिताशून्यतत्कोटिप्रकारकज्ञानत्वम् । तथा च संशये निश्चयपदाविषयतासिद्धावपि न क्षतिरिति वाच्यम् । एकधर्मावच्छिन्ने तत्कोटिसंशयरूपस्यान्यधर्मावच्छिन्नांशे तत्कोटिनिश्चयस्य संभवात् तद्धर्मावच्छिन्नविशेष्यतानिरूपितविलक्षणविषयताशून्यत्वस्य तद्धर्मावच्छिन्नविशेष्यकनिश्चयत्वशरीरे निवेशनीयतया धर्मितावच्छेदकनिवेशस्य सर्वथा कारणत्वप्रतिबन्धकत्वपक्षीयलाघवस्य विलयप्रसङ्गादिति ।

परे तु—अत्र प्रामाण्याप्रामाण्योपस्थितित्वज्ञानदशायां प्राप्ताभावनिश्चयविषये धर्मिणि प्राप्तज्ञानेच्छायाः यथा तद्दृशव्याप्युपस्थितमहत्त्वम् तत्प्रतिबन्धकतायां

साध्यतदभावयो विरोधेन यथैकज्ञानस्यापरधीप्रति बन्धकत्वम्, तथ साध्य.भावव्याप्यवत्त्वस्यापि साध्य.विरोधित्वात्तद्बुद्धेरपि साध्यधीप्रतिबन्धकत्वात् । विरोधिज्ञानत्वस्य प्रतिबन्धकत्व तन्त्रत्वात् निबन्धेतु

---

व्य.प्यवृ.त्तित्वेपि तद.वच्छेदक.वच्छेदेन प्र.द्यवत्त्व सम्भवा द्विषयविरोधिना *वच्छेदकावच्छेदेन विशिष्टबुद्धौ तदवच्छेदेन प्र.घ भ ववत्ता न प्रतिबन्धकतायामेव तद्धर्मकाऽव्य प्यवृ त्तित्वमह भ ये नाधांशत । त.द्दश तद्व्याप्यव घ.ज्ञानस्य त.द्दशावैशिष्टबुद्धि प्रत्यविरोधित्वेतु त द्दश व्याप्यवृत्तित्वमह.भावो पे.क्षित एव । प्राद्य प्र.वस्था व्य.प्यवृत्त्वे प्राद्या.वच्छेदकावच्छेदेन प्राद्या-भाववति वर्तमानस्यापि तद्व्याप्यतम विषय.येर ध भेरद्द ए । साध्यानवच्छेदक.वच्छेदेन साध्यवति वर्तमाने यद्देशकालावच्छेदेन यत्र साधनं तद्देशकालावच्छेदेन तत्र साध्यमिति व्याप्तिर्न सम्भवतीति चेत् ! का क्षतिः, नहि पक्षत वच्छेदक देशकाल.व.च्छेदेन स ध्य नु.मितौ तदवच्छेदेन गृहीत त.द्दशाव्याप्तिक हेतुमत्त परामर्श एव हेतुरितिव -- च्छेदकावच्छेदेन। ऽ नुमिति स्थले ऽ साद्धिव्यभिचारा ऽ सङ्कीर्णव धस्य हेत्व.भासत्वं व्यवस्थापितवतो मणिकृ रस्य नुमतम् ! तथ सति साद्धिपरामर्श.त् प्रमानु मित्यसम्भवेन बाधे दोष.न्तर.सङ्करस्य दुर्घटत्वात् । तथ च वच्छेदक देशक.ल.घ टिता प्र तियो गिव्य धिकरण हेतुसम नाधिकरणा भ घघटिता व्याप्तिरपि तन्मतेऽ.वच्छेदकावच्छेदेन नु मि.ति प्रयोजिका । तद्द स व्याप्तघघटितेनाव च्छेदकावच्छेदेन हेतुमत्त पर मर्शन्य.पि विपरीतकेव्य नुमिति प्र.तिबन्धकत्वे साध्याभाव धर्मिका व्य प्यवृत्तित्व ज्ञ.न.भावोप्यपेक्षित इत्यवच्छेदकावच्छेदेन हेतुमत्त.पर.मर्शस्य तदवच्छेदेन साध्यानुमित.वपेक्षितत्वेपि दर्शितरीत्या मंसत.नुमित्युपपत्तिरिति । *)

लिङ्गत्वज्ञानम्। बाधे पक्षधर्मे हेतौ व्याप्तिबाधः। प्रकरणम्,
रागे तु न व्याप्तिपक्षधर्मताबाधः फलम्। नाप्यलिङ्गत्वज्ञानं

---

(बाध इति) "हेतौ" प्रकृतेऽन्यत्र वा। स्वपक्षधर्मे च पक्षधर्मता-
बाध इति शेषो वा। तथा च हेतौ व्याप्तिपक्षधर्मतान्यतरबाध इत्यर्थः।

---

स्याज्ज्ञानजनीनम्, "अलिङ्गत्वज्ञानम्" असाधकत्वज्ञानम्, अनिश्चितदोषस्य ज्ञातस्य फलमित्यर्थः। तथाच तादृशदोषवत्त्वं प्रसिद्धहेत्वाभासलक्षणं फलमिति भावः। "पक्षधर्मे हेतावि" त्यत्र हेतुपदस्य प्रकृतहेतुपरत्वे अपक्षधर्मव्याप्यप्रकृतहेतुकबाधस्थले व्याप्यत्वासिद्धिरूप तत्फलासम्भवात् तत्फलघटितलक्षणाव्याप्तिरतो हेतुपदस्य प्रकृताप्रकृतसाधारणहेतुमात्रपरतां दर्शयितुमाह- (हेतौ-प्रकृतेऽन्यत्र वेति) तथा च ह्रदो वह्निमान् धूमादित्यादावपि साध्याभाववत्पक्षघटितेन तद्व्यापकहेतुना द्रव्यत्वादिरूपहेत्वन्तरे व्याप्यत्वानुमितिसम्भवात् लक्षणसमन्वय इति भावः। यद्यपि प्रकृतहेतौ नैतत्फलमिति तत्फलकत्वं न बाधितहेतोर्लक्षणम्, तथापि तत्फलकदोषवत्त्वं तल्लक्षणमिति नानुपपत्तिः। हेतुपदस्य प्रकृताप्रकृतसाधारणहेतुपरत्वे तदुपादानमफलम्, अन्यावर्तकत्वादिति पक्षधर्मे व्याप्तिबाध इत्येवोच्यते, अतः प्रकृतहेतुपरमेव तदुच्यमित्याशयेनाऽपक्षधर्मप्रकृतहेतुकबाधस्य फलान्तरं पूरयति (अपक्षधर्मे चेति) अत्र प्रकृतहेत्वर्थकं हेताविति पूर्वोक्तमनुषञ्जनीयम्। एतत्कल्पे फलाननुगमाद् घटितलक्षणेऽव्याप्तिनाशङ्क्यान्यतरत्वेन तत्फलानुगमे मूलमिमाय इति दर्शयति (तथाचेति) (हेत्वादिति) प्रकृत इत्यादिः। व्याप्तिभङ्गे साध्ये साध्याभाववत्पक्षवृत्तित्वं हेतुः, पक्षस्य साध्याभाववत्त्वेनैव निवेशः, न तु पक्षतावच्छेदकरूपेणापि तत्र प्रवेश इति -

व्याप्त्यादिबुद्धिमत्त्वात् । नापि विपरीतबुद्धि, स्वसाध्यविपरीतेनानियमात् । नापि संशयः, प्रत्येकं कोटिद्वयानुपनयात् । किंतु कथमत्र तत्त्वानिर्णय इति जिज्ञासाफलम् । तथाच प्रकृतसाध्यहेत्वोः किं तत्त्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः

---

(प्रकृतेति) प्रकृतसाध्ययोर्हेत्वोरित्यर्थः ।

---

न्यर्थं विशेषणता । पक्षधर्मताभङ्गे साध्ये पक्षनिष्ठाभावप्रतियोगिसाध्यव्याप्यत्वं हेतुः । अत्रापि साध्यस्य तादृशाभावप्रतियोगित्वेनैव निवेशः । हेतुद्वयमेव बाधघटितमिति बाधस्यान्यतरफलकत्वमुभयत्र । मूले (व्याप्त्यादिबुद्धिसत्त्वादिति) तद्धेतोरपि विरोधिपरामर्शदशायां सत्प्रतिपक्षस्थले च व्याप्तिपक्षधर्मताप्रतीतिसत्त्वादित्यर्थः । तथाच प्रकरणसमदोषस्य व्याप्त्यादिविरहे साधकत्वासम्भवादिति भावः । "विपरीतबुद्धि"- स्वसाध्याभावानुमिति । सत्प्रतिपक्षहेतो फलमिति शेषः । (स्वसाध्यविपरीतेना नियमादिति) धूमादेर्हेतो वह्न्यभावाव्याप्यत्वाभावादित्यर्थः (संशय इति) कोटिद्वयोपस्थितिद्वारकसाध्यसंशय इत्यर्थः (कोटिद्वयानुपनयादिति) स्वेन स्वसाध्यस्यैवोपस्थापनादिति भावः । (इति जिज्ञासेति) एतादृशतत्त्वनिर्णयोपायेच्छाफलिका जिज्ञासेत्यर्थः । अनयोः किन्तत्त्वमिति जिज्ञासेति यावत् । अतो नाग्रिमग्रन्थविरोधः । ननु स्वसाध्यव्याप्त्यादिमत्त्वेपरिस्थितयोर्हेत्वोरन्यतरस्य समीचीनत्व एव जिज्ञासा, तद्वक्ष्यति 'अत्र हेतुसमीचीनत्व' इति, तथाच प्रकृतसाध्यहेत्वोरिति यथाश्रुतमसङ्गतम्, अतो दीधितिकृद्धेतुद्वयार्थकतया तद्व्याचष्टे (प्रकृतसाध्ययोरिति) "किं तत्त्वमि" ति मूलस्य कस्समीचीन इत्यर्थः । एतादृशजिज्ञासा प्रयोजकत्वं

प्रकरणसमः । नह्यनुपस्थिते प्रतिपक्षे एकस्माज्जिज्ञासा, किंतु निर्णय एव ।

अथ ज्ञातुमिच्छा जिज्ञासा, सा च ज्ञानेष्टसाधनता ज्ञानात् संशयाद्वेति कथं तेन विना विरोधि

(संशयादिति) तज्जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात्,

प्रत्येकं करवं समर्था न्य संशयादिसाधारणम्, अत स्तद्वारणाय (अप्रति- पक्षधर्मतोपस्थितेरिति) उदासीनव्यासव्याद्युपस्थिते वारणाय विशेषणद- लम् । न च व्याप्यादेरननुगमात् साधारणरूपेण तदुपस्थिते निवेशा- सम्भवः हि विशिष्य प्रकृतसाध्य तदभावव्याप्यत्वोपस्थिते निवेशस्या पञ्चक त्वेन जनकान्तवैयर्थ्यमिति वाच्यम्, अनुमितिचरमकारणत्वेन व्याप्य- न्तरोपस्थिति साधारणेन तन्निवेशासम्भवात् । यद्दृशपरामर्शसहकारेण यादृ- शपरामर्शस्योक्त जिज्ञासाजनकत्वं तादृशपरामर्शो निवेश्यः जिज्ञासात्वरूपमो- ष्मकतर परामर्शद्दशायां नातिप्रसङ्गः । (प्रकरणसम इति) दोष इति शेषः । प्रकृतसाध्यकव्याप्यपरामर्श तदभावव्याप्यपरामर्शयो जिज्ञासाजनने मिथस्सहकारितां व्यवस्थापयति (नह्यनुपस्थित इति) अस्तीत्यर्थः । " प्रतिपक्षे "- विरोधिपरामर्शान्तरे । " एकस्मात् "- परामर्शात् । " निर्णयः "- एकतर साध्यस्यैकतरसमीचीनत्वस्य वा निर्णयः । फलोप- धान गर्भलक्षण मेकपरामर्शदशायां नातिप्रसक्तमित्येतदभरता " नही " त्यादिनेत्युज्यते, जिज्ञासोपधानस्य नियमेन तदघटितलक्षणस्या व्याप्या विपक्ष- णासम्भवात् ।

नन्वि-" इष्टसाधनता ज्ञानात्संशयाद्वे " ति विकल्पोऽसङ्गतः ज्ञान- गोचरेच्छायां यादृशेष्टसाधनताज्ञानस्य सर्वत्रैव हेतुतया संशयकरवे तत्करव ऽप्यवच्छेदायोगा दित्यत इष्टभेदाभिप्रायकतया विकल्पं सङ्गमयति (तज्ज- न्येति) संशयजन्येत्यर्थः । संशयजन्यस्य दुःखस्य, उत्सारणम्-कारणी-

व्याप्ति पक्षधर्मताज्ञानाभ्यामग्रिमव्याप्तिविशिष्टज्ञानोत्पत्तिकाले पूर्वपरामर्शनाशात् ।

---

उत्पत्तिकाले-उत्पत्तिपूर्वकाले । व्याप्तिपक्षधर्मताज्ञानयो उत्पादकमानिय-मादुभयोर्नाशकत्वमयुक्तम् । उत्पत्त्यैव वा तयो रन्वयः । यत्र च व्याप्तिपक्षधर्म-तयोः समूहालम्बनं तत्र द्वितीयपरामर्शोत्पत्तिकाल एव प्रथमपरामर्शनाशः ।

---

एकपरामर्शानन्तरमपरपरामर्शजनकव्याप्तिज्ञानपक्षधर्मताज्ञानयोर्द्वयोः क्रमेणैवोत्पत्तिः, तथा च प्रथमपरामर्शं चतुर्थक्षण एव परामर्शान्तरोत्पत्तिः, तदानीं च पूर्वपरामर्शनाशो नोत्पद्यते, अपितु स्वद्वितीयक्षणोत्पन्नविशेषगुणतृतीयक्षण एवेत्युत्पत्तिकालपदं तत्पूर्वकालपरतया व्याचष्टे दीधितौ- (उत्पत्तीति) "नाशा" दित्यतः नाशोत्पत्तिप्रतीतिरौत्सर्गिकीत्याशयेनेदं व्याख्यानम् । नाशस्य स्वार्थकत्वे तु यथाश्रुतमेव सङ्गच्छते । अन्यतरैकस्यैव गुणस्य ना-शकतयैकत्रोभयोर्व्याप्तिपक्षधर्मताज्ञानयोः पूर्वज्ञानाशकत्वासम्भवात्, पृथक् स्थलेऽपि नाशकत्वाभिप्रायकतया ज्ञानाभ्यां विनाशादिति मूलं सङ्गमयति ( व्याप्तीति ) ( उत्पादकमानियमादिति व्याप्तिज्ञानोत्तरमेव पक्षधर्मताज्ञानं तदनन्तरमेव व्याप्तिज्ञानमुत्पद्यत इति नियमाभावादित्यर्थः । (उभयोर्नाशकत्वमयुक्तमिति ) उक्तज्ञानयोर्यज्ज्ञानं प्रथमतो यत्रोत्पद्यते तत्र तस्य नाशकत्वादिति भावः । "विशिष्टज्ञानोत्पत्तिकाल" इत्यत्रोत्पत्तौ तादृशज्ञानयोर्हेतुत्वेनान्वये एकत्रैवोभयहेतुत्वान्वयायोग्यतानिर्वाहात् किं स्वरूपभेदानुसरणेनेत्याशयेनाह ( उत्पत्त्यैवेति ) व्याप्तिपक्षधर्मताविषयकैकज्ञानस्थलेऽपि परा-मर्शयोर्यौगपद्यं न सम्भवतीति व्यपनाह ( यत्र चेति )

मुत्पद्यते । तादृशपरामर्शश्च स्वार्थानुमाने प्रत्यक्षादितः, परस्य तु वाद्युपन्यस्त न्यायोत्थापित प्रमाणात् । अस्य केवलान्वयिन्यपि सम्भवः, घटोऽभिधेयः प्रमेयत्वादित्यत्रा भिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि, जात्यन्यत्वे सति घटमात्र वृत्त्यन्यधर्मत्वात्, घटान्योन्याभाववत् पटरूपवच्च,

---

"अस्य"- निरुक्तसत्प्रतिपक्षितत्वस्य ( जात्यन्यत्वेति ) सत्ता कम्बुग्रीवादिमत्त्वादावेकैकस्य व्यभिचारा द्विशिष्टोपादानम् ।

---

न्वयिसाध्यके साध्याभावाप्रसिद्ध्या असम्भवात् "अस्ये" ति मूलं निरुक्तव्यवहारौपयिकपरामर्श संवलनात्मक सत्प्रतिपक्षपरतया व्याचष्टे (अस्येति) अभिधेयत्वे द्वित्वाद्यवच्छिन्नाभावप्रतियोगित्वसाधारणरूपेण घटनिष्ठाभावप्रतियोगित्वञ्चास्य विरोध्यविषयकत्वेन घटेऽभिधेयत्वज्ञानाप्रतिबन्धकतया तत्सामग्र्या न सामान्यतोऽभिधेयत्वानुमान प्रतिरोध इत्यभिधेयत्वमिति ग्रन्थस्याभिधेयत्वत्वपक्षक घटनिष्ठाभावप्रतियोगितावच्छेदकत्वसाध्यक ज त्वप्राप्ति त्वविशिष्ट घटमात्रवृत्तितानवच्छेदकत्वलिङ्गकानुमाने तात्पर्यम्, दृष्टान्तोऽपि घटान्योन्याभावत्वं पटरूपत्वञ्च । दीधितौ " सत्ता कम्बुग्रीवादिमत्त्वादा " विति यथाश्रुतं यथाश्रुतमूलानुसारेण । यथाविवक्षिते तु सत्तादिपदं सत्तात्वादिपरम् ( एकैकस्येति ) केवलविशेष्य केवलविशेषणयो रित्यर्थः । ननु " घटनिष्ठात्यन्ताभाव " इत्यन्तेन प्रसिद्धपटत्वाद्यभावाविवक्षणे तत्राभिधेयत्व प्रतियोगिकत्वस्य बाधाच्च साधनासम्भवः, अभिधेयत्वाभावस्य चाप्रसिद्ध्या

घटनिष्ठासंताभावोऽभिधेयत्वप्रतियोगिकः, घटवृत्तिनित्याभावत्वात्, घटनिष्ठान्योन्याभाववदिति विशेषादर्शनदशायां । नच पक्षैक्यमपि तन्त्रम, विरोधस्यैव

---

(घटनिष्ठेति) घटनिष्ठात्यन्ताभावत्वेन सामान्यतः पक्षत्वान्न वाऽऽश्रयासिद्धिः ।

---

न पक्षत्वसम्भव इत्याशङ्कां निरसितुमाह ( घटनिष्ठेति ) उभयमतप्रसिद्धेनेत्यादिः । " सामान्यतः "- सामान्यरूपेण ( न वाश्रेति ) सामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यतया ग्रांशतो न यो दोषः । अभावस्य कस्यचिदभिधेयत्व प्रतियोगिकत्वमपीति विवादे पक्षतावच्छेदकावच्छेदेन बाधो दुर्निवेयः, पक्षतावच्छेदकप्रसिध्यैव नाश्रयासिद्धिरित्यर्थः । ननु स्वरूपसम्बन्धेनाऽभिधेयत्वत्वावच्छिन्नसाध्यकानुमितौ पक्षनिष्ठाभावे तत्सम्बन्धावच्छिन्नविशेषिताभिधेयत्वत्वावच्छिन्नप्रतियोगिकत्वानुमितिरेव विरोधिनी, तादृशं च साध्यमप्रसिद्धम् ; नच—घटनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वेन पक्षत्वादुद्देश्यसिद्धिः, स्वरूपसम्बन्धावच्छिन्नगगनाभावस्य संयोगादिसम्बन्धावच्छिन्नाभिधेयत्वत्वावच्छिन्नप्रतियोगिताकाभावसमनैयत्येनाभिमततया सिद्धसाधनस्य दुर्वारत्वात् ; इति चेत्सत्यम्, स्वरूपसम्बन्धावच्छिन्नायां घटनिष्ठाभावप्रतियोगितायां घटनिष्ठनित्याभावप्रतियोगितात्वेन हेतुना घटनिष्ठाभिधेयत्वभेदप्रतियोगिता दृष्टान्तेनाभिधेयत्वत्वावच्छिन्नत्वानुमाने तात्पर्येण समञ्जसम् ।

मूले ( विशेषादर्शनदशायामिति ) व्यभिचारिण्येतादृशहेतौ व्यभिचारग्रह दशाया मित्यर्थः । " केवलान्वयिन्यपि सम्भव " इत्यनेनास्यान्वयः ।

न्वाधस्य समवेतत्वादौ द्वितीयस्य घटाभावादौ व्यभिचार इत्यत आह (विशेषादर्शनेति) वस्तुतो घटो नाभिधेयः कम्बुग्रीवादिमत्त्वादित्यादि व्यतिरेकिणा सत्प्रतिपक्षः सम्भवत्येव, व्यापकाभावेनाप्रसिद्धस्यापि व्याप्याभावस्य सिद्ध्युपगमात् ।

---

व्यभिचारस्थलं दर्शयन्नेव सत्प्रतिपक्षप्रयोजनमाह दीधितौ (नन्विति) " आद्यस्य "- जात्यन्यत्व इत्यादिप्रथमानुमानहेतोः । " द्वितीयस्य " घटत्वेत्यादि द्वितीयानुमानहेतोः । प्रतियोगित्वादिप्रकारक बाधबुद्धेः विशिष्टबुद्धिविरोधिताया नव्यैरनभ्युपगमात् , तथा सति तत्सम्बन्धादि प्रकारकबुद्धेरपि विरोधापातात्प्रोक्तानुमानेन घटोऽभिधेयः प्रमेयत्वादि त्यनुमानप्रतिरोध सम्भव इति स्वयमभिधेयत्वरूप प्रतियोगिप्रकारकाभावानुमानमेव मूलकृता साध्याप्रसिद्ध्योपेक्षितमपि प्रतिरोधकतया व्यवस्थापयति (वस्तुत इति) साध्याप्रसिद्ध्या ऽन्वय्यनुमानासम्भवात् , घटादिसाधारण द्रव्यत्वादेः पटादौ व्यभिचारसम्भवेन व्यतिरेकितयापि साधकताया स्सुघटत्वाभावेन पक्षमात्रवृत्ति कम्बुग्रीवादिहेतुतात्क व्यतिरेक्यादरः । अभावसाध्यक व्यतिरेकितायां साध्याप्रसिद्धेरनपेक्षा दर्शयति (व्यापकाभावेनेति) घटादावभिधेयत्वादि व्यापकतया गृहीतस्य कम्बुग्रीवादिमत्त्वाभावस्याभावेन कम्बुग्रीवादिमत्त्वेनेत्यर्थः । " अप्रसिद्धस्यापि "- प्रतियोगितयाभिधेयत्वादिकं प्रकारीकृत्याज्ञातस्यापि । " व्याप्याभावस्य "- व्याप्यतया गृहीतमभिधेयत्वादिकं प्रतियोगितया प्रकारीकृत्य वस्तुभूतस्याभावान्तरस्यापि । "सिद्ध्युपगमात् " अप्रसिद्धसाध्यकानुमानस्य एकदेशिनामेवानुमततयाभ्युपगमोक्तिः । कम्बुग्रीवादिमत्त्वाभावस्य वास्तवाभिधेयत्व व्यापकताविरहादवस्तुभूताभिधेयत्वाभावस्यानुमित्या ग्रहणासम्भवात् प्रसिद्धघटत्वाभावस्य व्याप्यतया गृहीताभिधेयत्व प्रतियोगिकत्वाभावात् व्यापकाभावेनेत्यादि यथाश्रुतस्यासङ्गतिर्बोध्या । व्यवहर्तव्य विशिष्टप्रसिद्धावपि न विशिष्टाभेदर-

प्रत्येकपदार्थप्रसिद्ध्यैव तादृशप्रतिज्ञाद्युपपत्तेः विशिष्टस्य वाक्यार्थत्वात् । सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्रव्याप्यवांश्च पक्षः पक्षनिष्ठौ साध्याभावसाधकत्वव्याप्यौ- इत्येवमादि प्रत्येकमेव । विभाजकन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधि

---

प्रतिज्ञाद्यसम्भव इत्याह ( प्रत्येकपदार्थप्रसिद्ध्यैवेति ) तावतैव भ्रमात्मकस्य व्यवहारोपयोगि विशिष्टज्ञानस्य सम्भवात्, विशिष्टज्ञानं विनापि तत्र द्विशेष्यांशे तद्विशेषणावगाहित्वेन तात्पर्यघटकप्रतीतेर्ज्ञानेन विशिष्टबोधकवाक्यप्रयोगसम्भवाच्चेति भावः । मूलकृता सत्प्रतिपक्षदोषानभिधानात्तद्वयन्तं प्रदर्शयति ( सत्प्रतिपक्षस्त्विति ) सत्प्रतिपक्षहेतोः दोषस्त्वित्यर्थः । तुकारेण मूलनिरुक्तसत्प्रतिपक्षव्यवहारविषयतावच्छेदकरूपस्य दोषत्वव्यवच्छेदः । " व्याप्यवान् "- व्याप्यविशिष्टः । " पक्षनिष्ठौ "- आधेयतया पक्षविशिष्टौ । ( एवमादीति ) आदिपदग्राह्येयासम्बन्धेन प्रकृतपक्षसाध्यकप्रकृतसाध्याभावादि पक्षकानुमिति जनकपरामर्श विषय प्रकृतपक्षव्याप्य विशिष्ट साध्याभावादि परिग्रहः, पक्षेसाध्याभाव इत्यादि बाधबुद्धेरपि पक्षे साध्यानुमिति विरोधितया तादृशबाधेऽवगाहकस्यापि परामर्शस्यानुमिति विरोधित्वेन तद्विषय विशिष्टस्यापि सत्प्रतिपक्षतौचित्यात् । अत एव साध्यतदभावप्रयोराधेयतया तत्तद्व्याप्यवत्ता ज्ञानसमकालदशायां पक्षे साध्य साध्याभावो वेति कोटिविशेष्यक संशयरूपा नानुमितिः । 'प्रत्येक' मेवेत्यनेन तावत्समुदायत्वस्य सत्प्रतिपक्षत्व दोषविभाजकत्वासंभवो दर्शितः । नन्वेवं प्रत्येकरूपस्य व्याप्यत्वा विभाजकत्वासम्भवात् सर्वसाधारण किमेतद्दोषविभाजकमित्याकाक्षायां तादृशरूपमाह ( विभाजकन्त्विति ) सर्वत्र प्रकृतेति पक्षसाध्ययोर्द्धेयोरेवान्वेति । प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकाव-

च्छिन्न प्रकारकानुमितित्व व्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदि-
का सती विशिष्टपक्ष विशिष्टसाध्यग्रहत्वव्यापक प्रतिबध्यतानिरूपित प्रतिब-
न्धकतावच्छेदक निरुक्तपक्षसाध्य वैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदक विषमि-
त्वावच्छिन्नानुमिति जनकतावच्छेदिका यादृशविशिष्ट निरूपितविषयिता
तादृशत्व मित्यर्थः । तादृशी च वह्न्यभावव्याप्यविशिष्ट ह्रदादि निरूपित
विषयितेति तत्र लक्षणसमन्वयः । साध्याभाव व्याप्यविशिष्ट पक्षविषयि-
ताया स्साध्यानुमितिप्रतिबन्धकतावच्छेदकतया तद्वदनुमिति जनकत्वावच्छे-
दक विषयिताके साध्याभावव्याप्यव्याप्य वत्पक्षादावतिव्याप्तिवारकतया स-
त्यन्तं सार्थकमित्यते । तत्र निरुक्तवैशिष्ट्यग्रह प्रतिबन्धकतावच्छेदकविषयि
ताकत्वरूप विरोधित्वान्तार्भावे ज्ञायकविषयविशेषणत्वे विषयिताभागस्य
द्विधा निवेशेन गौरवात् ज्ञायकताघटकविषयितायामेव प्रतिबन्धकतावच्छेद-
कत्व विशेषणं दत्तम् । पक्षतावच्छेदक वैशिष्ट्यनिवेशव्यावृत्तिः पूर्ववत् ।
उक्तप्रकारताशालि ग्रहनिरूपितप्रतिबन्धकता मात्रनिवेशे साध्याभावव्याप्य
व्याप्य वत्ताज्ञानस्यापि समूहालम्बन साध्यवत्ता ग्रहरूप साध्याभावव्याप्य-
व्याप्याभावादिरूपरूप विरे भिग्रह प्रतिबन्धकतया नोपदर्शित सत्प्रतिपक्षो-
न्नायक व्याप्तिरिति तादृशप्रकारताकानुमितित्व व्यापकप्रतिबध्यता निरू-
पित प्रतिबन्धकता निवेशः । तादृशप्रकारताशालि दोषविशेषजन्यज्ञान
माहार्यज्ञानञ्च प्रति साध्याभावव्याप्यवत्ताज्ञानस्याऽप्रतिबन्धकतया सत्प्र-
तिपक्षस्यैवाऽसंग्रह इति ज्ञानत्वमुपेक्ष्यानुमितित्वनिवेशः । ह्रदः काञ्चनमय-
वह्निमान्काञ्चन यद्हदे वह्निमानित्यादौ संग्राह्यस्य वह्न्यभावव्याप्य विशिष्ट-
ह्रदादे र्ज्ञानस्य प्रतिबध्यतावच्छेदककोटौ साध्यतावच्छेदकादिघटक काञ्चन-
मयत्वादिविषयिताया अनिवेशात्तदटित पक्षतावच्छेदकादिविशिष्टे साध्यता-
वच्छेदकादि विशिष्टवैशिष्ट्यग्रहत्वं नेतरकज्ञानप्रतिबध्यतावच्छेदक मित्य-
व्याप्ति स्स्यादिति स्वरूपसम्बन्धरूप सवच्छिन्नत्वं परित्यज्य व्यापकत्वं

प्रतिबध्यताविशेषणम् । अतएवोक्तस्थले आश्रयासिद्ध्या द्युन्नायके विशिष्ट-पक्षग्रहत्वादि मात्रावच्छिन्नविरोधित्वेऽपि विशिष्ट पक्षसाध्यवैशिष्ट्यच विषयकानुमितित्व व्यापकप्रतिबध्य ताघटित विरोधिताशालिनि काञ्चनमयत्वाभावा व्याप्यविशिष्ट हृदादौ सत्यन्तदळस्य निरुक्तपक्षसाध्य वैशिष्ट्यग्रह प्रतिबन्धकतावदनुमितिजनकतावच्छेदक विषयिताकत्वरूपतादृश विरोध्युन्नायकत्व-स्यच सत्त्वेनातिव्याप्तिरित्या दित्युक्तेये अविरोध्यन्त विशेषणम् । एतच "स गृह्यत" इत्यादिना स्वयमेव वक्ष्यते । उन्नेयतया प्रविष्टविशिष्टविषये अविरोधित्व विशेषण यथाश्रुत शब्दलभ्यम्, तदर्थ तादृशप्रतिबन्धकताव च्छेदकविषयिताकत्वत्वम् । तन्निवेशे अधिकविषयितानिवेश द्वारवम्, काञ्चनमय हृदो वह्निमानित्यादौ काञ्चनमयत्वाभाव व्द्रूद दिरूपाश्रयासिद्धया दे भेदस्य सत्प्रतिपक्षोन्नेय वह्न्यभाव विशिष्ट हृदादिरूपबाधे असत्त्वेना व्याप्तिश्चेद्युन्नायकताघटक बाधविषयताया विशिष्टपक्षादिग्रह प्रतिबन्धकतानवच्छेदकत्व निवेश । उक्तस्थले बाधग्रहस्याप्यनुमिति रूपविशिष्ट पक्षादिग्रह विरोधित्वसत्त्वाऽव्याप्तित दवस्थ्यमिति विशिष्ट पक्षग्रहत्व व्यापकत्वानि-वेश । विशिष्टपक्षग्रहत्व पर्याप्तावच्छेदकताकत्वस्य प्रतिबध्यताया निवेशे काञ्चनमय रजतमय हृदो वह्निमानित्यादा वाश्रयासिद्धयुन्नायके काञ्चनमय-त्वाभाव व्याप्यवद्धृद द यतिव्या ति, रजतमयत्वघटित पक्षतावच्छेदक वि-शिष्टविषयक ग्रहत्वस्य तत्प्रतिबध्यतानवच्छेदकत्वात्, अतस्तदुपेक्ष्य ताद-शग्रहत्वव्यापकताया स्तत्र निवेश । अतएव हृदो वह्निमानित्यादौ हृदत्वादि पक्षतावच्छेदकविशिष्ट विषयकग्रहत्वस्य केवलस्य कस्यापि प्रतिबद्धघतानव-च्छेदकत्वेपि नाप्रसिद्धि । नच तादृशग्रहत्वव्यापक प्रतिबध्यतानिवेशेपि कस्या अपि विरोधिज्ञान प्रतिबध्यत या हृद इत्यादि निर्धर्मितावच्छेदकक ज्ञानसाधारण तदृश ग्रहत्व व्यापकत्वासम्भवा तथाविध प्रतिबध्यता

प्रसिद्धेः, विशिष्टविषयकानुमितित्वव्यापकता निवेशे तादृशानुमितित्वस्य निर्धर्मितावच्छेदकक ज्ञानव्यावृत्तत्वेऽपि ह्रदो वह्निमान् ह्रदो घटवानित्यादि नानाधर्मप्रकारकानुमितिष्वेव ह्रदत्वादिविशिष्टविषयकानुमितित्व सत्त्वात्तादृशसकलानुमितीनां कस्यचिदपि ज्ञानस्य प्रतिबध्यत्वासम्भवेन तादृशानुमितित्वव्यापकप्रतिबध्यता न प्रसिद्ध्यतीति वाच्यम्; कामिनीजिज्ञासादि प्रतिबध्यताया एव तथाविधानुमितित्वव्यापिकायाः प्रसिद्धेः ।

वस्तुतस्तु विरोधिताघटक प्रतिबध्यतायामेव पक्षतावच्छेदकादि विशिष्टविषयकानुमितित्वव्यापकतानिवेशस्याऽप्रसिद्धिरिति पूर्वमेवावेदितम् । एतेन कामिनीत्वस्य यत्र पक्षतावच्छेदकता तत्र तद्विशिष्टविषयकानुमितित्वादेः कामिनीजिज्ञासाप्रतिबध्यत्वाव्याप्यत्वेऽपि नक्षतिः ।

अथ — उक्तेऽपि विशिष्टपक्षादि ग्रहाविरोधित्व निवेशेऽपि वह्न्यभाव व्याप्यव्याप्याभाववद्ध्रदो वह्निमानित्यत्र वह्न्यभाव व्याप्यव्याप्यविशिष्टह्रदे आश्रयासिद्ध्यात्मकेऽतिव्याप्तिर्दुर्वारैव, तस्य वह्न्यभाव व्याप्यविशिष्टह्रदात्मक सत्प्रतिपक्षस्य विशिष्टपक्षग्रहाविरोधिन उन्नायकत्वात्, आश्रयासिद्धित्वेनानुमिति विरोधितया सत्यन्तदलाक्रान्तत्वाच्च ।

नचोन्नायक एव विरोध्यन्तविशेषणं विवक्षितम्, उक्ताश्रयासिद्धेश्च विशिष्टपक्षग्रहविरोधितया नातिव्याप्तिरिति वाच्यम् । तथासति वह्निमान् ह्रदो वह्न्यभावव्याप्यव्याप्याभाववानित्यत्र वह्न्यभाव व्याप्यव्याप्यविशिष्ट ह्रदात्मकबाधे अनुमिति विरोधिवह्न्यभाव व्याप्यविशिष्टह्रदरूपाश्रयासिद्ध्युन्नायकेऽतिव्याप्तिः, तस्य वह्निविशिष्टह्रदात्मक विशिष्टपक्षग्रहाविरोधित्वादिति चेन्न;- उक्तेऽपि उन्नायकतया विरोध्यन्तस्य विशेषणतोपगमेनातिप्रसङ्गस्य वारणीयत्वात् । अथवा- उक्तैव विशेषणमेवाऽविरोध्यन्तम्, यद्धर्मावच्छिन्नप्रतिबध्यता घटितं विरोधित्वं सत्यन्तार्थः तद्धर्मावच्छिन्नप्रति-

प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम् । तदुन्नायकत्वञ्च याद्द
शविशिष्टविषयकत्वेन परामर्शस्यानुमितिजनकत्वं तत्त्वम् । तत्र साध्याभाव

---

व्याप्यतावच्छेदकविरोधिताश उन्नेय विशेषणतया विवक्षितत्वात्पूर्वोक्तस्थले च
वह्न्यभावव्याप्यव्याप्यविशिष्ट ह्रदत्वमेकाश्रयासिद्धे विशिष्टपक्ष ग्रहत्वावच्छि
न्नविरोधित्वेन सत्यन्तदलाक्रान्ताया स्तद्रूपावच्छिन्नाविरोधिन स्सत्प्रतिपक्षत्वे
नोन्नायकत्वेन नातिव्याप्तिः । उन्नेयबाधस्य उन्नायकसत्प्रतिपक्षस्य च विशि
ष्टपक्षसाध्यवैशिष्ट्य ग्रहत्वरूपैकधर्मावच्छिन्न प्रतिबध्यतानिरूपित प्रतिबन्धक
तावच्छेदक विषयिताकत्वेन सत्प्रतिपक्षे लक्षणसमन्वय इति । उन्नेये विरो-
ध्यन्तं विशेषणं वह्निव्याप्याभावादिसाध्यके वह्निव्याप्यवत्पक्षात्मकबाधस्य
विशिष्टपक्षादिग्रहविरोधिवह्निमत्पक्षोन्नायकस्य वारकमिति वक्ष्यते । तत्र यथा
श्रुतं विरोध्युन्नायकत्वं प्रतिबन्धकतावच्छेदक विषयिताक विशिष्टविषयिताका-
नुमिति प्रयोजकत्वम् , तत्र प्रतिबन्धकतावच्छेदक विषयितायां स्वानिरूपक
विषयनिरूपित विषयत्वेन निवेशनं गौरवेण पुनः सिकास्पर्शनमनुकरोतीति
प्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नानुमिति प्रयोजकत्वं निवेशितम् ।
उक्तस्थले वह्निव्याप्यवत्पर्वतरूपबाधस्य वह्निमत्पर्वतविषयक समूहालम्बनरूप
वह्निव्याप्यवत्पर्वतरूप विरोधिविषयकानुमिति प्रयोजकतयातिप्रसङ्गस्स्यादिति
विरोधिविषयित्वावच्छिन्ननिरूपित प्रयोजकत्वं निवेशितम् ।

अनुमितिजनकत्वरूपोन्नायकत्वं न विषयस्येति अनुमितिजनकताव-
च्छेदक विषयिताकत्वरूपमनुमिति प्रयोजकत्वमेवात्र तदित्याह ( तदुन्नायक
त्वञ्चेति ) ( यादृशविशिष्टविषयकत्वेनेति ) तृतीयार्थोऽनतिरिक्तवृत्तित्वरूप
मवच्छेदकत्वम् , तन्निवेशाद्वह्न्यभावव्याप्यवत्पर्वतरूपोक्तस्थलीयबाधे सत्प्रतिपक्ष
विषयक समूहालम्बनविषये नातिप्रसङ्गः । स्वरूपसम्बन्धरूपावच्छेदकत्व
निवेशाभावेन सत्प्रतिपक्षकुक्षौ केवलपक्षादौ च नातिप्रसङ्गः (तत्रेति) तादृश

व्याप्यवत्पक्षादिकम् । असाधारणविरोधयोरन्यतरस्य सत्प्रतिपक्षविधया दोषत्वपक्षे प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाहि परामर्शो ग्राह्यः । अत्रच सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य, अविरोध्यन्तेनाश्रया-

---

विशिष्टं चेत्यर्थः । साध्यव्यापकाभावप्रतियोगि प्रकृतहेतुमत्पक्षादौ मतभेदेन विरोधासाधारणरूपेऽतिव्याप्तिं वारयति ( असाधारणेति ) ( सत्प्रतिपक्षविधयेति ) अनुमितिप्रतिबन्धकसाध्याभाव व्याप्यवत्ताज्ञानविषय विधये-त्यर्थः । सपक्षविपक्षव्यावृत्तत्व मसाधारण्यम्, साध्यासामानाधिकरण्यं विरोध इति मतेऽनुमित्यविरोधिनि तत्र मोक्तलक्षणासिद्धासिद्धिरित्यतः "पक्ष" इत्युक्तम् । " प्रतियोगित्वादी " त्यादिना पक्षधर्मतापरिग्रहः । तथाच प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदक विशिष्टव्यापकाभाव प्रतियोगित्व विशिष्ट प्रकृतसाधनतावच्छेदकावच्छिन्न वैशिष्ट्यानवगाहिपरा मर्शनिष्ठानुमिति जनकतावच्छेदक विषयिताकत्वरूपमुन्नायकत्वं विवक्षणीय-मित्यर्थः । रूपान्तरेण यत्र प्रकृतहेतो र्व्यतिरेकिप्रतिहेतुता तत्स्थलीयप्रति-पक्षसंग्रहाय प्रकृतसाधनतावच्छेदक निवेशः । रूपान्तरावच्छिन्न प्रकृतसा-ध्यव्यापकीभूताभावप्रतियोगित्व विशिष्टप्रकृतहेतुमत्पक्षकालीनत्वस्य यत्र प्रकृतसाध्यतावच्छेदक घटकत्व तत्स्थलीयतादृशसाध्यतावच्छेदक विशिष्टसाध्याभाव व्याप्यवत्पक्षात्मक प्रतिपक्षसंग्रहाय प्रकृतसाध्यताव च्छेदकनिवेशः । यत्र प्रकृतसाध्यव्यापकाभावप्रतियोगित्व विशिष्टप्रकृतसा-धनवत्त्वेन रूपान्तरावच्छिन्नपक्षस्य प्रकृतपक्षतावच्छेदके प्रवेश स्तत्र सत्प्र तिपक्षस्य तादृशपक्षतावच्छेदकविशिष्टे साध्याभावव्याप्यवत्तारूपस्य संग्रहाय प्रकृतपक्षमावच्छेदकनिवेशः । साध्याभावनिरूपितान्वयव्याप्तिविशिष्टप्रकृत हेतुमत्पक्षस्यापि लक्ष्यतोपगमान्न तत्रातिव्याप्तिः । तस्यासाधारण्यमात्रात्म-कत्वे तदनवगाहित्वमपि परामर्शविशेषणन्देयम् । तत्सङ्ग्राहकमपि आदिप-दम् । ( सत्प्रतिपक्षोन्नायकस्येति ) साध्याभावव्याप्य व्याप्यवत्पक्षादे रवि-

